


वाराणसेयसंस्कृतविश्वविद्यालयदर्शनपरिषदधिवेशनस्य

वेदान्तदर्शनपरिषदि

पण्डितराज-एस०सुब्रह्मण्यशास्त्रिमहोदयानाम्

# अध्यक्षीय-भाषणम्

दि० २४-१२-६७

# वेदान्तदर्शनम्

गुरवे सर्वलोकानां भिषजे भवरोगिणाम्।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥

विष्णुर्वा त्रिपुरान्तको भवतु वा ब्रह्मा सुरेन्द्रोऽथवा
भानुर्वा शशलक्षणोऽथ भगवान् बुद्धोऽथ सिद्धोऽथवा।
रागद्वेषविषार्तिमोहरहितः सत्त्वानुकम्पोद्यतो
यः सर्वैः सह संभृतो गुणगणैस्तस्मै नमः सर्वदा ॥

अयि ! सकलसद्विद्याविद्योतमानान्तरङ्गाः दर्शनपरिषदध्यक्षा उपकुलपतिमहोदयाः, पण्डितप्रकाण्डाश्च, दर्शनतत्त्वबुभुत्सवश्छात्राश्च !

महदिदं भागधेयमस्माकं यद्वयमद्य वेदान्तपरिषदायोजनाय वेदान्तवेद्यस्य परस्य ब्रह्मणो नगर एव सम्मिलिता इति। यदा त्वहम् 'एतद्वत्सरीयदर्शनपरिषदन्तर्गतवेदान्तपरिषद आध्यक्ष्यं भवता वोढव्यम्' इति श्री-उपकुलपतिमहोदयानां नियोगमवाचयम्, तदाऽतिदुष्करेऽस्मिन् महति कार्येऽसमर्थोऽहमिति जानन्नपि सर्वविद्यानामीशानस्य ब्रह्मणोऽधिपतेरावासे सञ्चाल्यमाना पण्डितोत्तमैर्विभूषितेयं सभा विद्यार्थिनो मम सर्वज्ञकल्पानां भवतां सन्दर्शनेन तद्विद्भिः सह संवादेन च विद्यासञ्जननेनोपकरिष्यतीति मत्वा तेषां नियोगं शिरसा अधारयम्। अत्र च एतादृशमवसरं ममोपकल्पितवद्भ्यस्तत्रभवद्भ्यः परिषन्निर्वाहकेभ्योऽधमर्णोऽहमिति सप्रश्रयं निवेदयामि।

तत्र तावदद्वैतद्वैतविशिष्टाद्वैतद्वैताद्वैतशुद्धाद्वैताख्यानि सर्वाण्यपि दर्शनानि वेदान्तमूलकत्वाद् वेदान्तदर्शनपदेनाख्यायन्ते। वेदस्य चरमावयवभूतास्तात्पर्यविषयार्थप्रतिपादका वा

उपनिषदो वेदान्ता उच्यन्ते। तासां तात्पर्यनिर्णयाय श्रीबादरायणाचार्यैः प्रणीतानि ब्रह्मसूत्राणि च गौण्या वृत्त्या वेदान्ता उच्यन्ते। श्रीकृष्णेन भगवता अर्जुनायोपदिष्टा भगवद्गीतापि वेदान्तपदेनाभिलप्यते, वेदान्तार्थप्रकाशकत्वात्, 'श्रीमद्भगवद्गीतासूपनिषत्सु' इत्यादौ प्राचीनैः अस्या उपनिषत्त्वेन व्यवहाराच्च। अत एवेयं प्रस्थानत्रयी सर्वैरपि वेदान्ताचार्यैः सबहुमानं व्याख्याता। यद्यपि शिवगीता रामगीता ब्रह्मगीता इत्यादयो बह्व्यो गीताः समुपलभ्यन्ते तत्र तत्र पुराणेषु, तथापि तेषां सर्ववेदान्ताचार्यैरपरिग्रहादग्रहणम्, उपनिषदश्च यद्यपि विंशत्युत्तरं शतं मुद्रिता दृश्यन्ते, तथापि तासु प्राथमिका दशोपनिषदः श्वेताश्वतरजाबालकौषीतक्यादयश्च काश्चिदेव सर्वैः परिगृह्यन्ते। अद्वैतिनां तु सर्वा अप्यनुमताः। आर्षग्रन्थेषु ज्ञानवासिष्ठादयोऽप्यद्वैतिभिरेव परिगृह्यन्ते। मध्वाचार्योदाहृताः कौषारवादिश्रुतयो नैवोपलभ्यन्ते, नापीतरैराचार्यैरुदाह्रियन्ते। आगमेषु मध्ये पाञ्चरात्रागमः श्रीमध्वाचार्यैं रामानुजाचार्यैश्च सर्वांशे प्रमाणमिष्यते; शैवागमः श्रीकण्ठाचार्यादिभिः शैवैः; अद्वैतिभिस्तु तयोर्वेदाविरुद्धांशे प्रामाण्यमुपगम्यते। वेदविरुद्धांशे तेषां तात्पर्यं नास्तीति वा गीयते।

इति प्रमाणविवेचनम्।

एतेषां वेदान्तानां श्रीशङ्कराचार्यभास्कराचार्यरामानुजाचार्यमध्वाचार्यवल्लभाचार्यादिभिः बहुभिराचार्यैः स्वस्वदर्शनानुगुण्येन भाष्याणि विरचितानि। उपलभ्यमानभाष्येषु प्राचीनतमानि श्रीशङ्कराचार्यविरचितानि भाष्याण्येव, इतरभाष्येषु खण्डनाय तेषामुपादानदर्शनात्। परन्तु श्रीशङ्कराचार्येभ्यः पूर्वमपि वेदान्तानां विशिष्टा वृत्तय आसन्निति तदुदाहृतवचनेभ्योऽवगच्छामः। तथाहि—उपवर्षाचार्यकृता वृत्तिः श्रीशङ्कराचार्यैः देवताधिकरणे एक आत्मनः शरीरे भावादित्यधिकरणे चोदाहृता। आचार्यसुन्दरपाण्ड्यकृता काचन ब्रह्मसूत्रवृत्तिः समन्वयाधिकरणभाष्योदाहृतैः आचार्यसुन्दरपाण्ड्यकृतत्वेन व्याख्यातृभिरवतारितैः "गौणमिथ्यात्मनोऽसत्वे पुत्रदेहादिबाधनात्" इत्यादिश्लोकैः सूच्यते। आचार्यब्रह्मनन्दिना छान्दोग्योपनिषदो वाक्यरूपा वृत्तिर्व्यरचि। सा च प्रकृत्यधिकरणे "अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां संप्रदायमतः समाश्रितः" इति भास्कराचार्यवचनात्, तत्रैव "वाक्यकारेण ब्रह्मनन्दिना" इति कल्पतरुवचनाच्च सुस्पष्टा। उक्तवाक्यग्रन्थोपरि द्रविडाचार्यैः वृत्तिः काचिद् विरचिता आसीदिति "सिद्धं तु निवर्तकत्वात्" इति माण्डूक्यभाष्योदाहृतेन, "अत्र च सम्प्रदायविदः आख्यायिकां संचक्षते" इति बृहदारण्यकभाष्योदाहृतेन च तद्वचनेन प्रतीमः। अयं च ग्रन्थो भामतीकारैरपि तत्र

तत्रोदाहृतः। श्रीरामानुजाचार्यैरपि च स्वमतोपोद्बलनाय इयं वृत्तिः बहुवारमुदाहृता। भगवद्बोधायनकृतां तु विस्तीर्णां काञ्चन ब्रह्मसूत्रवृत्तिं श्रीरामानुजाचार्याः स्वभाष्यमूलत्वेन श्रीभाष्यारम्भे जगदुः। परन्त्वस्या उल्लेखः प्राचीनग्रन्थेषु अर्वाचीनग्रन्थेषु वा न दृश्यते। बृहदारण्यकोपनिषदः भगवद्गीतायाश्च भेदाभेदपरत्वेन भर्तृप्रपञ्चाचार्यैः काचन वृत्तिः कृता इति तदीयवाक्यानां शाङ्करभाष्ये उदाहरणाद् गम्यते। इमे ग्रन्था इदानीं नोपलभ्यन्ते। श्रीगौडपादाचार्यविरचिता माण्डूक्यकारिकैव तु केवला उपलभ्यते। अत्रापि आगमप्रकरणस्थ-कारिकाः श्रीमध्वाचार्यैः उपनिषदन्तर्गतत्वेनैव मन्यते इत्यन्यदेतत्।

तदिदं वेदान्तदर्शनमद्वैतदर्शनपर्यायत्वेन प्राचीनेषु पण्डितेषु पप्रथे। तथाहि वाक्यपदीये भर्तृहरिः —

यत्र द्रष्टा च दृश्यं च दर्शनं चापि कल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रैय्यन्तवेदिनः॥

इति वदन् प्रपञ्चमिथ्यात्ववादिनस्त्रैय्यन्तवेदिन इत्याह। तथा मीमांसावार्त्तिककारा भट्टाचार्या बृहट्टीकायाम्—

द्वैतपक्षात्पराणुद्य बुद्ध्यशुद्धिसमाश्रयात्।
परमात्मानमेवैकं तत्त्वं तत्त्वविदो विदुः॥

इत्यद्वैतपक्षं तात्त्विकमाहुः। तथा बृहत्यां प्रभाकरोऽपि—"यस्तु ब्रह्मवादिनामेष निश्चयो यदुपलभ्यते न तत् तथ्यम्, यन्नोपलभ्यते तत्तथ्यमिति नमस्तेभ्यो विदुषाम्, नोत्तरं वाच्यम्। यदुक्तमहङ्कारममकारौ अनात्मनि आत्माभिमानौ इति मृदितकषायाणामेवैतत्कथनीयम्, न कर्मसङ्गिनामित्युपरम्यते" इति वदन् अद्वैतिनमेव ब्रह्मवादिनमाह। तथा न्यायमञ्जर्यां जयन्तभट्टा अपवर्गनिरूपणे "तत्र वेदान्तिन आहुः—नित्यसुखमात्मनो महत्त्ववदस्तीत्यागमप्रामाण्यादुपगम्यताम्। तच्च संसारदशायामविद्यावरणेन न दृश्यते" इत्याहुः। तथा उदयनाचार्या न्यायकुसुमाञ्जलौ 'शुद्धबुद्धस्वभाव इत्यौपनिषदाः" इति वदन्तः अद्वैतदर्शनमेवौपनिषदमाहुः।

तथापि द्वैतविशिष्टाद्वैतशुद्धाद्वैतादिदर्शनकारैः वेदान्तानां स्वस्वप्रक्रियानुसारेण व्याख्यानात् तेषामपि वेदान्तदर्शनत्वं निरपवादमेव।

## वेदान्तदर्शनविदः प्रयोजनानि

यद्यपि सर्वेषामेवास्तिकदर्शनानामध्ययने इदमस्ति प्रयोजनं यद् देहादिव्यतिरिक्तात्मज्ञानसम्पादनेन देहसम्बन्धिभिः जन्मजरामरणादिभिः देहसम्बद्धपुत्रकलत्रमित्रादीनां साकल्य-

वैकल्यादिभिश्चात्मनोऽसंस्पर्शात् तज्ज्ञानेन लौकिकसुखदुःखादौ हर्षविषादादिपरिहार इति, तथापि वेदान्तदर्शनाद् आत्मनो देहादिव्यतिरेकज्ञानं दृढीभवति। दर्शनान्तरस्य तु पौरुषेयत्वेन "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" इति न्यायेन अव्यवस्थिततत्त्वसन्देहेन तथा दृढप्रत्ययासम्भवात्। "कपिलो यदि सर्वज्ञः काणादो नेतिका प्रमा। तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः॥" इति प्रवादाच्च। यद्युच्येत व्याख्यातृकौशलेन वेदान्तदर्शनानामपि भिन्नप्रस्थानत्वादियमव्यवस्था तदवस्थेति, नैतद्युक्तम्; वाक्यतात्पर्य-निर्णायकन्यायैः वेदान्तानामेकविधार्थे तात्पर्यावधारणात्, आत्मनो देहादिव्यतिरेकांशे सर्वेषां वेदान्तिनमैकमत्याच्च। वेदान्तदर्शनेषु शैववैष्णवादिमतानुयायिनां च वेदान्तैः तत्तद्देवता-प्रभावनिर्णयेन तदुपासकानां तासु भक्त्यतिशयः, ततः तत्तद्देवताप्रसादेनैहिकामुष्मिकफलप्राप्तिः, अन्ते तत्तद्देवतासायुज्यं च प्रयोजनानि। अद्वैतदर्शननिष्ठानां तु अयं विशेषलाभो यद् ब्रह्मविष्णु-रुद्रशक्तिगणपत्यादीनां सर्वासामेव वैदिकदेवतानां सगुणब्रह्मरूपत्वाद् या काचन देवता विकल्पेन समुच्चयेन वा यथारुचि उपासितुं शक्यते। प्रपञ्चमिथ्यात्वभावनया विषयेषु शीघ्रतरं वैराग्योत्पत्तिश्चेति। कर्मफलानित्यत्वज्ञानेन तदुत्पादे विलम्बानुभवात्।

सर्वेषां वेदान्तदर्शनानामिमे साधारणाः सिद्धान्ताः। तथाहि—वेदस्यापौरुषेयत्वम्, स्वतः प्रामाण्यम्, आत्मनः शरीरेन्द्रियमनःप्राणव्यतिरिक्तत्वं सगुणब्रह्माभ्युपगमः, जीवस्य तदुपासनात् मोक्षसिद्धिरित्यादयः। यद्यपि अद्वैते ब्रह्मणो निर्गुणत्वं पारमार्थिकम्, सगुणत्वं तु औपाधिकं मिथ्येत्यभ्युपगम्यते, तथापि व्यवहारदशायामिमे सर्वे उपास्योपासकादिव्यवहारा अभ्युपगम्यन्त एव। अत एवोक्तं गौणपादाचार्यैः—

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।
परस्परं विरुद्ध्यन्ते तैरयं न विरुध्यते॥ इति।
अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम्॥ इति च।

इदानीमद्वैतदर्शनस्य प्रक्रिया सङ्गृह्यते। अस्मिन् मते अद्वितीयं सत्यज्ञानसुखात्मकं ब्रह्मैव सत्यम्, तदितरत्सर्वं मिथ्या। सत्यज्ञानादयश्च ब्रह्मणः स्वरूपभूताः, न पृथग्भूता गुणाः। तेषां चैतन्यादपृथक्त्वेऽपि पृथगिवावभासः। जीवब्रह्मैक्यसाक्षात्कारान्मोक्ष इत्यादि। एष्वंशेषु अद्वैतग्रन्थकाराणां सर्वेषामैकमत्ये सत्यपि व्यवहारसिद्धविषयेषु अनादराद् बहवः प्रक्रिया-भेदाः तैरेव रचिताः। तथाहि—'जीवः अन्तःकरणावच्छिन्नः' इति वाचस्पतिमिश्राः; 'अन्तः-करणप्रतिबिम्बः' इत्यन्ये; 'अविद्या प्रतिबिम्बः' इत्यपरे; अविद्यायाम् आभासो जीवो मिथ्या' इति श्रीविद्यारण्यश्रीचरणाः। ईश्वरश्च अन्तःकरणाभावावच्छिन्न इति मायाबिम्ब इति मायाप्रतिबिम्ब

इति न बिम्बो नाप्यवच्छिन्न इति च मतभेदाः। अविद्यापि सदसद्विलक्षणेत्यस्मिन्नंशेऽविवादेऽपि जीवाश्रिता प्रतिजीवं भिन्ना इत्येकं मतम्, एका शुद्धब्रह्माश्रितेत्यपरं मतम्। मायाऽविद्ये भिन्ने इति केचित्। अभिन्ने इत्यपरे। एको जीव इति मुख्यसिद्धान्तः। नानेति वाचस्पतिमिश्राः। अत्र कैश्चिन्मेधाविभिः दृष्टिसृष्टिवादः अङ्गीकृतः। तस्य च अपरिपक्वकषायाणां बुद्धावनारोहात् सृष्टदृष्टिवाद एव प्रायः अवलम्ब्यते। माण्डूक्यकारिकायां ज्ञानवासिष्ठे च परं पूर्ववादस्य विस्तरेण कथनम्। जीवन्मुक्तिरस्तीति प्रायोवादः। नास्तीत्यपि केचित्। एवं प्रक्रियाभेदः नाद्वैतहानिकरः। तदुक्तं वार्त्तिककारैः—"यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता॥" इति। परिमलकारैरपि—"अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधो न दोषावहः। यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानासु तत्प्राच्योदीच्यनक्षत्ररूपासु स्थूलारुन्धतीषु विरोधो न दोषावहः" इति। अपि तु भिन्नरुचीनामपि श्रद्धाजननात् प्रक्रियाभेदः अद्वैतानुकूल एवेति।

अस्मिन्मते प्रमाणं द्विविधम्—तत्त्वावेदकातत्त्वावेदकं चेति। तत्र तत्त्वावेदकं सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यानि तत्त्वमस्यादिमहावाक्यानि च। अतत्त्वावेदकानि तु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि। व्यवहारे भट्टनय इत्यङ्गीकारात्। अयं च प्रायोवादः। यतो भट्टाङ्गीकृतः विपरीतख्यातिवादः नात्र सम्मन्यते। तदङ्गीकृतोऽपूर्वं ईश्वरप्रसादकोपाभ्यामन्यथासिद्धः। मीमांसकैरीश्वरानङ्गीकारादेव तु अपूर्वाभ्युपगम इति विज्ञेयम्। शब्दद्रव्यत्वनित्यत्वे वेदापौरुषेयत्वमित्यादिकं तु समानम्।

तत्र प्रत्यक्षप्रमाणं पञ्चेन्द्रियाणि इति विवरणकाराः, मनसा, सह षडिन्द्रियाणीति भामतीकाराः। तद्वति तत्प्रकारकानुभवत्वं प्रमात्वमिति नैयायिकपक्षोऽत्र न सङ्गच्छते। एतैः भ्रमे अनिर्वचनीयवस्तुभानाङ्गीकारेण तत्रापि वस्तुसद्भावात् तत्रातिप्रसङ्गात्। अनधिगताबाधितार्थविषयकज्ञानत्वं तु समीचीनम्। अनुमानं तु पक्षधर्मताज्ञानमेव। तेन व्याप्तिसंस्कारोद्बोधे सति अनुमितेरेव, जननाद् व्याप्तिस्मरणादिव्यवधाने मानाभावात्। अनुमितिश्च यत्र पक्षेन्द्रियसन्निकर्षः तत्र पक्षांशे प्रत्यक्षम्, जातिसांकर्यस्यादोषत्वात्, वृत्तिभेदाभ्युपगमाच्च। उपमानं तु मीमांसकाभिमतमेव। शब्देषु मध्ये कर्मकाण्डः लौकिकानि आप्तवचनानि च अतत्त्वावेदकानि। वेदान्तेषु तत्त्वमस्यादिमहावाक्यानि सत्यं ज्ञानमनन्तं ब्रह्मेत्यवान्तरवाक्यानि च तत्त्वावेदकानि। तानि च संसर्गागोचरप्रमाजनकत्वाद् अखण्डार्थकानीत्युच्यन्ते। तदनुरोधेन च शाब्दबोधहेतूनि आकाङ्क्षादीनि निर्वक्तव्यानि। यथा—शाब्दबोधानुकूलपदार्थोपस्थितिरासत्तिः, तात्पर्य-

विषयाबाधो योग्यता, तात्पर्यविषयानुभावकत्वमाकाङ्क्षा इति; न तु न्यायशास्त्रोक्तानां ग्रहणम्, अखण्डार्थकवाक्यजन्यबोधे अव्यापनात्। तत्त्वमादिपदानां जहदजहल्लक्षणाश्रयणात्, तेभ्यः शुद्धस्य बोधः। न चैवं सति अमुख्यार्थत्वाङ्गीकारो दोषः, यतः प्रतीयमानार्थपरित्यागेन अर्थान्तरपरत्वममुख्यार्थत्वम्, अशक्यार्थपरत्वं वा तत्। न त्वत्र तदुभयमपि। लक्षणाव्यपदेशस्तु विशिष्टशक्तिज्ञानाकार्यशाब्दधीजनकोपस्थितित्वरूपलक्षणासाधर्म्याद् औपचारिकः। न चोभयत्र सखण्डार्थत्वमेवास्त्विति शङ्कनीयम्। यतः सत्यज्ञानादिवाक्यस्य लक्षणवाक्यत्वेनाखण्डार्थता, तत्त्वमस्यादेः सोऽयं देवदत्त इत्यादिवाक्यसाधर्म्यात् सा प्रमाणसिद्धा। अत एव शुद्धब्रह्मविषयकाज्ञानस्य शुद्धविषयकेण ज्ञानेन निवृत्तिरपि सुतरां सङ्गच्छते। यद्यपि शोधकवाक्येनापि शुद्धविषयकं ज्ञानं जन्यते, तथापि जीवब्रह्माभेदविषयकमज्ञानं जीवब्रह्माभेदविषयकज्ञानपूर्वकेण अखण्डाकारेण ब्रह्मनिर्विकल्पेनैव निवर्तितुमर्हति, न तु सत्यज्ञानादिविषयेण ज्ञानेनेति तस्यावश्यकता। शाब्दबोधप्रकारे हि कार्यान्विताभिधानपक्षः प्रभाकरस्य, अभिहितान्वयपक्षः भट्टस्य। उभयविलक्षणः पदज्ञानं पदार्थोपस्थितिः शाब्दबोधश्चेति नैयायिकपक्षः। तत्र 'पुत्रस्ते जातः' इत्यादौ सिद्धपरेऽपि व्युत्पत्तिदर्शनात् प्रभाकरेण कार्यान्विते व्युत्पत्तिस्त्याज्या। अन्वितार्थपरत्वमपि न शब्दानां नियमनम्। सत्यं ज्ञानमित्यादौ अखण्डार्थवाक्ये तदभावात्। ततश्च तैः तात्पर्यविषयत्वमन्वितत्वमुपगन्तव्यम्, तच्चास्माकमनुकूलमेव। अभिहितान्वयपक्षे प्रथमं विभक्त्यन्तपदाभ्यां प्रकृत्यर्थविभक्त्यर्थयोः संसर्गानुभवः तादृशानुभवाभ्यां विभक्त्यन्तपदार्थयोः संसर्गानुभव इत्यङ्गीक्रियते। तत्त्वमसीत्यादौ तु संसर्गाभावाद् निर्विकल्पक एव बोध इति मतद्वयेऽपि शाब्दबोधोपपत्तिः।

तदिदं ब्रह्मज्ञानं शब्दजन्यमपि प्रत्यक्षमेव विषयसान्निध्ये शब्दादपि दशमस्त्वमसीत्यादौ प्रत्यक्षाङ्गीकारात्। अत एव विषयप्रत्यक्षत्वं प्रमात्रभिन्नत्वम्, प्रत्यक्षार्थविषयकज्ञानं च प्रत्यक्षम्—इत्याहुः विवरणकाराः। मिश्रास्तु मानस एव ब्रह्मसाक्षात्कारः तत्त्वमस्यादिवाक्यार्थानुसन्धानमूलक इत्याहुः। मतद्वयेऽपि अपरोक्षमेव ब्रह्मज्ञानमज्ञाननिवर्तकम्। अपरोक्षभ्रमस्य तन्मूलाज्ञानस्य चापरोक्षज्ञानेनैव निवृत्तिसंभवात्, रज्जूरगादिभ्रमे तथैवानुभवात्। न च वाच्यम् "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति छान्दोग्यवचनाद् ब्रह्मविषयकस्मृतिसन्ततिरेव मोक्षहेतुरिति, तत्र कुतः साक्षात्कारनिर्बन्ध इति। यतः "तत्र को मोहः कः शोक एकत्वमनुपश्यतः", "ततस्तु तं पश्यते निष्कलं ध्यायमानः", "जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते", "दृश्यते त्वग्र्यया बुद्ध्या", "एतमेव पुरुषं ब्रह्मततममपश्यत्", "प्रति प्रतिबोधविदितं मतम्", "यो यो देवानां प्रत्यबुध्यत"

इत्यादिबहुश्रुत्यनुरोधात् साक्षात्कारात्मकस्यैव ब्रह्मज्ञानस्य मोक्षहेतुतावगमात्। स्मृतिलम्भे इत्यत्रापि साक्षात्कार एव विवक्षितः, ब्रह्मणः उपहितरूपेण नित्यं ज्ञातत्वाद् ब्रह्मसाक्षात्कारस्य ज्ञात-विषयत्वेन स्मृतित्वोपचारात्।

अद्वैतमते प्रमेयं द्विविधम्—दृग् दृश्यं चेति। तत्र दृग् उपहितानुपहितभेदेन द्विधा। उपहिता जीवेश्वरभेदेन द्विधा। अनुपहिता तु शुद्धं ब्रह्मैव। तत्र जीवः अविद्यायां प्रतिबिम्ब-भूतं चैतन्यम्। तच्च अविद्याया एकत्वादेकमेव। प्रतिशरीरं सुखदुःखादिभेदस्तु सुखादीनां मनोधर्मत्वात्, मनसश्च प्रतिशरीरं भेदादुपपद्यते। अत एव कामादीननुक्रम्य एतत्सर्वं मन एव इति श्रुतिः, 'कामा येऽस्य हृदिश्रिताः' इति श्रुतिश्च सङ्गच्छेते। न तु मनसः कामादिनिमित्तत्वात् तादृशश्रुत्युपपत्तिः। कार्यनिमित्तयोर्भेदात् मन एवेत्यस्यानुपपत्तेः। "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेश्च जीवैकत्वम्। स च सत्यज्ञानानन्दरूपः। 'मानभूवं' 'भूयासमेव' इति सर्वदा-सत्त्वोपलम्भात् तस्य सत्यता, सर्वदा प्रमाणं विनैव प्रकाशमानत्वात् तस्य ज्ञानरूपता, परमप्रेमास्पद-त्वात् सुषुप्तावपि विना विषयं सुखानुभवात् तस्य आनन्दरूपता च। तत्र यद्यपि सत्यत्वं ज्ञानत्वं च संसारदशायां सम्यग्भातः आनन्दांशश्च मेघावृतसूर्यवत् अव्यक्ततया भाति, तथापि अपरि-च्छिन्नानन्दस्य इदानीमभानात् मोक्ष एव च भानात् संसारमोक्षयोर्भेदोपपत्तिः। तदभानं चाविद्यया तदावरणात्। अविद्या च भावरूपा अहमज्ञ इत्यनुभववेद्या। तस्या विक्षेपशक्ति-प्राधान्येन मायेति व्यवहारः। मायाविद्ययोश्चैक्यम् "माया चाविद्या च स्वयमेव भवति" इति श्रुतिसिद्धम्। इयं च सदसद्विलक्षणा "नासदासीन्नो सदासीत्" इति श्रुतेः। सा जगतः परिणाम्युपादानं ब्रह्मविवर्तोपादानमिति केचित्। ब्रह्मैव जगदुपादानम्, माया तु ब्रह्मगतोपादानत्व निर्वाहिकेत्यन्ये। अद्वैते विवर्तवाद एव मुख्यः सिद्धान्तः। परिणामवादस्तु स्थूलदृष्टीनां परितोषाय स्वीकृतः पूर्वपक्षत्वेन। अत एव "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतौ मृत्तिकासत्यत्वबोधनेन मृत्पिण्डादेः वाङ्मात्रालम्बनत्ववचनेन च कार्यस्य मिथ्यात्वं स्वरसतः बोध्यते। न चास्यां श्रुतौ मृत्तिकेत्येव सत्यमित्यत्र इति पदवैयर्थ्यम्। इतिपदस्याद्यर्थक-तया मृत्तिकादिरूपं कारणं सत्यमिति तदर्थात्। अथवा इतिशब्दस्य प्रकारार्थतया मृत्तिकात्वेन घटादिकं सत्यमित्यर्थः। अनेन एकविज्ञानेन सर्वविज्ञानप्रकारोऽपि प्रकटीकृतः। ब्रह्मविज्ञानेन सर्वं तत्त्वतो विज्ञातं भवति, सर्वस्य तत्त्वं विज्ञानं भवतीति यावत्। नहि कार्यस्य घटादेः प्राति-स्विकरूपादर्शनं दोषाय, शुक्तिरजतज्ञानवत् कार्यज्ञानस्याज्ञानत्वात्, तत्त्वज्ञानस्यैव ज्ञानपदेन व्यपदेशात्। मृत्पिण्डदृष्टान्तेन प्रपञ्चस्यापि मिथ्यात्वं सूचितं भवति, "नेह नानास्ति किञ्चन" इत्यादि-

श्रुतिभिः कण्ठत उक्तं च। न चातात्त्विकाद्भेदात् कथं सत्यस्य ब्रह्मणोऽवगम इति शङ्कनीयम्। स्वप्नस्य रेखावर्णादेश्च सत्यसूचकत्वदर्शनात्। अद्वैत्यभिमते प्रपञ्चमिथ्यात्वे ब्रह्मनिर्गुणत्वे जीवब्रह्मैक्ये च श्रुतयः, ब्रह्मसूत्राणि भगवद्गीता च प्रमाणानि। नेह नानास्ति किञ्चन, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, तत्त्वमसीत्यादयः श्रुतयः। तदनन्यत्वमारम्भणशब्दादिभ्यः अरूपवदेव हि तत्प्रधानत्वाद् आत्मेति तूपगच्छन्ति शास्त्रदृष्ट्या तूपदेश इत्यादीनि सूत्राणि। "न च मत्स्थानि भूतानि निर्गुणं गुणभोक्तृ च, क्षेत्रज्ञं चापि मां विद्धि" इत्यादयो गीताञ्च अत्रोदाहार्याः।

ननु 'वेदान्तेषु ब्रह्मणः सगुणत्वबोधकेषु सर्वकर्मा सर्वकामः सर्वगन्धः' 'सत्यकामः सत्यसंकल्पः' इत्यादिषु सत्सुकथम् "अशब्दमस्पर्शमरूपमव्ययम् अस्थूलमनणु केवलो निर्गुणश्च" इत्यादीनां निर्गुणवाक्यानामनुरोधेन ब्रह्मणो निर्गुणत्वसिद्धान्तः समञ्जसः, सगुणवाक्यानुरोधेन निर्गुणवाक्यानामेव हेयगुणराहित्यपरताऽस्तु इति चेन्न; तत्परातत्परश्रुत्योः तत्परश्रुतेः प्राबल्यात्। उपासनाविधिपराणाम् उपासनाविधौ तात्पर्यात् उपासनस्य च वाचं धेनुमुपासीतेत्यादिवत् कल्पितगुणैरपि सम्भवात्। यद्यपि प्रमाणान्तरविरोधाविरोधयोरसतोः श्रुतेः भूतार्थे प्रामाण्याभ्युपगमाद् देवताविग्रहादिवत् सत्यकामत्वादिविशिष्ट ईश्वरः सिध्यत्येव, तथापि तस्य पारमार्थिकत्वं न सिध्यति, तत्परनिर्गुणश्रुतिविरोधात्।

ननु "द्वा सुपर्णा सयुजा सखाया" इत्यादिश्रुतौ जीवेशयोः द्वित्वश्रवणात् तस्य च भेदव्याप्तत्वात् जीवेश्वरभेदः सिध्यति, तत्कथमभेदः प्रतिज्ञायत इति; न यतः 'द्वा सुपर्णा' इत्यादिश्रुत्या अर्थापत्तिसिद्धो भेदः काल्पनिकोऽपि भवितुमर्हति, यथा विष्ण्ववतारभूतयोः श्रीरामकृष्णयोः रामकृष्णाविति। किञ्च अस्याः श्रुतेः जीवान्तःकरणपरत्वस्य ब्राह्मणेन उपपादितत्वादपि नेयं श्रुतिः, उक्तभेदे प्रमाणम्, अभेदस्तु 'अनेन जीवेनात्मनानुप्रविश्य' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिबहुश्रुतिसिद्धो न बाधनीय इति तात्पर्यात्।

अद्वैतिनामितरेषां च विवादे इमे विषयाः प्राधान्येन विचारणीयाः—

(१) प्रत्यक्षागमयोर्विरोधे कस्य प्राबल्यम्?

(२) एकविज्ञानेन सर्वविज्ञानश्रुतिः कथं व्याख्येया?

(३) द्वितीयाद्वै भयं भवति इत्यस्याः कथमुपपादनम्?

(४) मृत्तिकेत्येव सत्यम् इत्यस्याः कथं व्याख्या?

(५) यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् इत्यस्याः का उपपत्तिः? इत्यादयः।

तत्राद्वैतिनः आगमप्रत्यक्षविरोधे प्रत्यक्षस्यैव बाधमिच्छन्ति, तस्य चन्द्रप्रादेशिकत्व-प्रत्यक्षादौ भ्रमत्वप्रसिद्धया गृहीताप्रामाण्यककूटसाक्षितुल्यत्वेन प्राबल्यायोगात्। शास्त्रं तु अपौरुषेयतया निर्दोषं स्वत एव प्रमाणम्। "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्" इति स्मृतिरपि तथा। एवं च प्रत्यक्षविरुद्धमपि प्रपञ्चमिथ्यात्वादिकं श्रुत्या आर्जवेन बोध्यते। घटः सन्नित्यादिप्रत्यक्षस्य अधिष्ठानसत्ताविषयत्वेन कालत्रयाबाध्यसत्त्वाविषयकत्वेन प्रत्यक्षविरोधा-भावाच्च। श्रुतिप्रमितं जीवब्रह्मैक्यमपि प्रत्यक्षाविरुद्धमेव, नाहं ब्रह्मेति प्रत्यक्षेण उपहितयोर्भेद-ग्रहणात्, शास्त्रेण शुद्धस्य ब्रह्मणा ऐक्य बोधनात्।

इतरे तु वेदान्तिनो नाहं ब्रह्मेति प्रत्यक्षविरोधाज्जीवब्रह्मैक्यं घटः सन्निति प्रत्यक्ष-विरोधात् प्रपञ्चमिथ्यात्वं च नाभ्युपयन्ति, तेषां मते तत्त्वमसीत्यस्य अन्वयक्लेशः शरीरवाचिनां शरीरिपर्यन्तत्वव्युत्पादनक्लेशः, तथात्वेऽपि असिपदस्य कथञ्चिदुपपत्तिरित्यादयो दोषाः प्रादुःष्युः। एकविज्ञानेन सर्वविज्ञानं च चेतनत्वेन साजात्याद्वा प्राधान्याद्वा कथञ्चिद् निर्वहणीयं भवेत्।

इदानीमद्वैताभिमतं मोक्षस्वरूपं तत्साधनं चाधिकृत्य किञ्चित् प्रस्तूयते। अहङ्कारमारभ्य आत्मनः कर्तृत्वभोक्तृत्वादिकं सर्वं जीवस्य संसारः। तस्य च ब्रह्मात्मैक्यसाक्षात्कारान्निवृत्तिः। साक्षात्कारस्य साधनं वेदान्तमहावाक्यश्रवणम्। श्रवणस्य च मनननिदिध्यासने अङ्गे। शमादिकं चान्तरङ्गसाधनम्। साधनचतुष्टयमपि शमादिना उपलक्षणीयम्। निष्काम-कर्मानुष्ठानं देवताभक्तिः योगाद्यनुष्ठानेन चित्तैकाग्र्यसम्पादनमित्यादिकं बहिरङ्गसाधनम्। आत्मसाक्षात्कारे देवताभक्तिः निर्गुणध्यानं च श्रवणेन सह विकल्पेन साधने। तथा च विनैव श्रवणादिना भक्त्या परितुष्ट ईश्वरो भक्तस्य मनसि तत्त्वमस्यादिवाक्यमाविर्भाव्य साक्षात्कारं जनयतीति निर्गुणध्यानेन स्वयमेव साक्षात्कारो भवतीति च वदन्ति। मोक्षश्चाविद्यानिवृत्त्युप-लक्षितः प्रकाशमानापच्छिन्नानन्दात्मकोऽत्रैवाविद्यानिवृत्तौ प्राप्यते, न देशान्तरगमनमपेक्षते। 'अत्र ब्रह्म समश्नुते' इति श्रुतेः। अत एव जीवन्मुक्तिसिद्धिः। जीवन्मुक्तानां व्यवहारस्तु अविद्याध्वंसाख्यात् संस्काराद् दग्धपटन्यायेन सिद्ध्यति। संन्यासोऽपि ज्ञानसाधनम्, 'न च प्रमादात्तपसो वाप्यलिङ्गात्' इति श्रुतेः। अद्वैतसाक्षात्कारे सर्वेषामेव मनुष्याणां देवादीनां चाधिकारः वेदपाठपूर्वकः श्रवणाधिकारः परं त्रैवर्णिकानामेव, अपशूद्राधिकरणन्यायात्। तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति श्रवणात्। सर्वेषामेव जीवानां विशिष्टशरीरप्राप्त्या ब्रह्मविद्याधिकारोऽस्त्येव।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

इति तु चिरकालविलम्बमपेक्ष्योक्तमिति द्रष्टव्यम् ।

## विशिष्टाद्वैतमतम्

विशिष्टाद्वैतवादिनो द्विविधाः—वैष्णवाः शैवाश्च । तत्र वैष्णवविशिष्टाद्वैतपरभाष्यप्रणेतारः श्रीरामानुजाचार्याः । "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरम्" इति श्रुतेः सर्वोऽपि चिदचिदात्मकः प्रपञ्च ईश्वरस्य शरीरम् । चिदचिच्छरीरकं ब्रह्म एकमिति, एकमेवाद्वितीयमिति श्रुतिनिर्वाहः । सूक्ष्मचिदचिद्विशिष्टस्य स्थूलतद्विशिष्टं प्रतिकारणत्वाद् ब्रह्मणः परिणाम्युपादानत्वोपपत्तिः । सर्वेषां प्रमाणानां सविशेषविषयतया निर्विशेषं वस्त्वप्रामाणिकमेव । चिज्जडात्मकप्रपञ्चस्य ईश्वरशरीरत्वात् सर्वे शब्दाः तत्तद्वाच्यतया प्रतीयमानवस्तुमुखेन तदभिमानिजीवतच्छरीरकपरमात्मपर्यन्तवाचकाः । सर्वं वस्तु स्थावरजङ्गमात्मकं जीवात्मकचेतनसहितं ब्रह्मणः प्रकारभूतं ब्रह्मैवेति ब्रह्मज्ञानेन सर्वज्ञानमुपपद्यते । नानात्वनिषेधवादाश्च सर्वं वस्तु एकस्यैव ब्रह्मणः प्रकारभूतमिति सर्वप्रकारं ब्रह्मैवावस्थितमिति सर्वात्मकब्रह्मपृथग्भूतवस्तुसद्भावनिषेधपराः । जीवात्मानो नित्याः ज्ञानस्वरूपाः, ज्ञानधर्मकाः, कर्तृत्वभोक्तृत्ववन्तोऽणुपरिमाणाः, परमात्मनोऽत्यन्तभिन्नाः स्वतः सुखरूपाश्च । तेषामुपाधिवशात् संसारः, तत्र केचन नित्यसंसारिणः "मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इति गीतावचनात् । केचन नित्यमुक्ताः, यथा—"गरुडविष्वक्सेनादयः सदा पश्यन्ति सूरयः" इति श्रुतिसिद्धाः । इतरे सर्वेऽपि साधनानुष्ठानेन मुक्तिभाजः । नित्यसंसारिणः कैश्चिन्नाभ्युपगम्यते "स किमहम्" इति संशयाद् मोक्षसाधनानुष्ठाने प्रवृत्त्यनुपपत्तेः ।

मोक्षहेतुश्च भक्तिरूपापन्नोपासनावेदनध्यानादिशब्दवाच्यो ज्ञानविशेषः । न ज्ञानाद् मोक्षः, नापि कर्मणः स्वतन्त्रात्; अपि तु कर्माङ्गकाद् भक्तिरूपापन्नाद् ज्ञानात् । महनीयविषये प्रीतिर्भक्तिः । रक्षकत्वाद्यध्यवसायविशेषविशिष्टा प्रपत्तिरपि मोक्षसाधनम् । इयं च साध्यभक्तिः कर्माद्यनपेक्षा मोक्षसाधनम् । साधनभक्तिस्तु असकृत्त्वकर्मापेक्षत्वादिसहितेति विशेषः ।

कैवल्यं नामापरो मोक्ष एतैरिष्यते । तच्च कैवल्यं स्वात्मानन्दानुसन्धानं प्रकृतिवियुक्तात्मस्वरूपावाप्तिरिति च श्रीरामानुजाचार्यैर्निर्दिष्टम् । "जीवस्य अनादिकर्मरूपाविद्यातिरोहितस्य अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते" इत्यन्यत्रोक्तेः । अयं मोक्षो न सर्वसम्मत इत्याहुः ।

ईश्वरस्तु व्यापकः सर्वशेषी जगदुत्पत्यादिकारणं जगतोऽत्यन्तभिन्नः। तस्य वस्तुपरिच्छेदाभावस्तु गुणानामियत्तया परिच्छेत्तुमशक्यत्वात् सर्वस्य ब्रह्मशरीरत्वेन तदन्तर्गतत्वात् तदन्याभावाच्चोपपादनीयः। ब्रह्मणोऽप्राकृतं शरीरं ब्रह्मलोकवर्ति। मोक्षमाणश्च जीवोऽर्चिरादिमार्गेण विद्युल्लोकं गतः, तत्र ब्रह्मलोकादागतेनामानवपुरुषसहायेन ब्रह्मलोकं प्राप्य ब्रह्मणः पर्यङ्कमारुह्य ब्रह्मणा सल्लापादिकं भजते। ईश्वर इवापहतपाप्मत्वसत्यसंकल्पत्वादिविशिष्टो भवति। एतादृशगुणसाम्यमेव सायुज्यमोक्ष इत्यभिधीयते। एतादृशगुणविशेषो जीवस्य स्वभावभूतोऽपि अविद्यादिप्रतिबन्धकवशात् संसारदशायां तिरोभूतो मोक्षे आविर्भवतीति वदन्ति। यदद्वैतिभिरुपगम्यते भक्तिर्नाम मानसीक्रिया पुरुषप्रयत्नसाध्या, ज्ञानं तु वस्तुतन्त्रं पुरुषेणान्यथाकर्तुमशक्यमिति तदेभिर्नाभ्युपेयते; ज्ञानमपि पुरुषेण कर्तुमकर्तुमन्यथाकर्तुं च शक्यमेवेति वदन्ति। शुक्तिरूप्यादिज्ञानेऽपि पञ्चीकरणप्रक्रियया रजतांशविशिष्टस्यैव वस्तुनो भानात् सर्वं ज्ञानं यथार्थमिति चैतेषामभ्युपगमः।

शैवविशिष्टाद्वैतं तु स्वीये ब्रह्मसूत्रभाष्ये श्रीकण्ठाचार्यैर्विस्तरेणोपपादितम्। अत्र च श्रीरामानुजमतप्रक्रियैव प्रायेणावलम्ब्यते। उपास्यदेवता तु शिवः, तत्सायुज्यं मोक्षः। अस्मिन् भाष्ये प्रायेण स्वमतप्रकाशनमेव क्रियते, न मतान्तरेषु अनुपपत्तयः प्रदर्श्यन्ते। क्वचित्तु अद्वैतप्रक्रियाऽनूद्यते 'केचित्त्वाहुः' इत्यादिना। तस्यायमभिप्रायोऽप्पयदीक्षितैरुच्यते यद् भाष्यकाराणां व्यवहारे शिवोत्कर्षे तात्पर्यसत्त्वेऽपि परमार्थावस्थायामद्वैतविद्वेषो नास्तीति। श्रीकण्ठाचार्यरामानुजाचार्ययोः पौर्वापर्ये विवदन्ते विपश्चितः शैवश्चोर इति वदन्तो रामानुजीयाः स्वभाष्यं प्राचीनमाहुः। श्रीकण्ठाचार्यप्रदर्शितरीतिमवलम्ब्य रामानुजाचार्याः वैष्णवविशिष्टाद्वैतभाष्यं वितेनुरित्यप्ययदीक्षिताः। सर्वथापि सगुणं ब्रह्म भजद्भिर्यथा विष्णुपरत्वेन सूत्राणि व्याख्याय विष्णुभक्तिर्दृढीकर्तुं शक्यते, तथा शिवपरत्वेन व्याख्याय शिवभक्तिरपि दृढीकर्तुं शक्यत इति प्रदर्शितं भवति। सर्वभक्तानुग्रहाय सूत्रप्रणेता भगवान् बादरायणः स्वविरचितानां शैवपुराणानां वैष्णवपुराणानां च सममेव वेदोपबृंहकत्वं प्रदर्शयन् उभयपरतयापि व्याख्यानायावकाश ददातीत्येतत् सहृदयानां प्रमोदावहमेव। ईश्वराज्ज्ञानमन्विच्छेद् मोक्षमिच्छेजनार्दनादित्युक्तेरुभयोरावश्यकत्वात्।

## मध्वमतम्

मध्वाचार्यमते तत्त्वं द्विविधम्—स्वतन्त्रं परतन्त्रं च। स्वतन्त्रो भगवान् विष्णुः, तदितरत् चरमचरं च परतन्त्रम्। भेदः पञ्चविधः—जीवेश्वरभेदः, जीवजगद्भेदः, जडेश्वरभेदः,

जीवानां जडानां च मिथो भेद इति। स सर्वोऽपि सत्यः। तत्त्वमसीत्युपदेश एकस्थानस्थत्वम्, एकाभिव्यक्तिस्थानकत्वं बुद्धिसारूप्यं वा निमित्तीकृत्य प्रवृत्तः। अथवा अतत्त्वमसीति पदच्छेदं कृत्वा व्याख्येयः। प्रपञ्चो यदि विद्येत इत्ययं भेदप्रपञ्चस्य नित्यत्वपरः। अद्वैतं परमार्थत इत्यस्य समाभ्यधिकशून्यं ब्रह्म उत्कृष्टोऽर्थ इत्यर्थः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विष्णोः प्राधान्यात् तज्ज्ञानेन सर्वं ज्ञातप्रायं भवतीत्येवंपरतया व्याख्येया। सर्वेषां वेदान्तानां विष्णूत्कर्षे तात्पर्यम्। विष्णुप्रसादादेव च मोक्षः। तत्र सायुज्यमुक्तिभाजो देवाः। ते च स्वोत्तरदेवतानुप्रवेशक्रमेण भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैः तद्भुक्तानेव भोगान् भुञ्जाना अपि कदाचिद् बहिर्निर्गत्य चिन्मात्रदेहेन्द्रियैः स्वसङ्कल्पेन भुञ्जाना उत्कर्षापकर्षभावं प्रतिपद्य पूज्यपूजकादिव्यवस्थामनुभवन्ति। देवव्यतिरिक्तास्तु सालोक्यादिमुक्तिभाजो भगवत्स्थानानि प्राप्य भोगान् भुञ्जाना वर्णाश्रमादिभेदं भोगतारतम्यं च भजन्ते। न च तारतम्ये दुःखासूयादिप्रसङ्गः, निर्दोषाणां तदभावात्। संसारिषु केचिद् नित्यबद्धाः तामसजीवाः तेषां न कदापि मोक्ष इत्याहुः। इदं तु "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथामनुष्याणाम्" इत्याद्यविशेषश्रुतिविरुद्धमिति ज्ञेयम्। मोक्षसाधने प्रवृत्तिप्रतिबन्धश्चात्रापि समानः। मध्वरामानुजमतयोः जीवाणुत्वजगत्सत्यत्वपाञ्चरात्रागमप्राधान्यादिकं यद्यपि समानम्, तथापि विशिष्टाद्वैते चिदचिच्छारीरमेकं ब्रह्मेत्यभेदः, एकमेव ब्रह्म चिदचित्प्रकारान्नानारूपेणावस्थितमिति भेदाभेदौ। स्वतस्तु चिदचिदीश्वराणां भेद एवेति विशेषः।

## श्रीवल्लभमतम्

श्रीवल्लभाचार्यास्तु शुद्धाद्वैतं स्वमतमुट्टङ्कयन्ति। अस्मिन् मतेऽद्वितीयमपि ब्रह्म बहुस्यां इतीच्छावशात् स्वीयं पूर्णानन्दरूपं तिरोभावयित्वा जीवस्वरूपं गृह्णाति। ततश्च भगवद्गतानामानन्दैश्वर्यज्ञानयशोवीर्याणां तिरोधानाज्जीवो दैन्यजन्मादिमत्त्वसर्वहीनत्वादिकं भजते। स्वरूपतिरोभावाच्च देहादिष्वहं ममेति बुद्धिमान् अविद्यासम्बन्धभाग् बद्धश्च भवति। अविद्यया पञ्चपर्वया देहेऽन्तःकरणे इन्द्रियेषु प्राणेषु चाध्यासाः स्वरूपविस्मृतिश्च भवन्ति। स च जीव उत्पत्त्यश्रुतेः परमात्मनो निस्सरत्येव केवलम्, नोत्पद्यते। स चाणुपरिमाण ईश्वरस्तु सगुण एव। तस्मिन् अणुत्वमहत्त्वे स्वतन्त्रत्वभक्तपराधीनत्वे सर्वकार्यस्थत्व-तत्स्पर्शरहितत्वे प्रमाणत्वप्रमेयत्वे साधनत्वफलत्वे इत्येवं विरुद्धनानाधर्माश्रयत्वं प्रमाणबलादभ्युपेयते। वेदैकगम्ये परमात्मनि यथावचनं तेषामङ्गीकारात्। ब्रह्म च जगतः परिणाम्युपादानं निमित्तं च।

तस्य चाधिदैविकं रूपं परं ब्रह्म, आध्यात्मिकं रूपमक्षरब्रह्म, आधिभौतिकं रूपं जगत्। तस्यैव च रूपभेदेन भोक्तृभोग्यभावः। जगदपि ब्रह्मैव यदा चिदानन्दांशयोर्द्वयोस्तिरोभावः सदंशमात्रप्रकाशः तदैव जगत्सृष्टेः। अत एव जडजीवयोः ब्रह्माभिन्नत्वमेकविज्ञानेन सर्वविज्ञानं चोपपन्नं भवति। जगदपि सत्यमेव। एतन्मते ज्ञानसहिता भक्तिर्मोक्षसाधनम्; मोक्षो नाम परब्रह्मणा पुरुषोत्तमेन सह सहभावपूर्वककृपानन्दप्राप्तिः। कर्ममार्गो ज्ञानमार्गश्च भक्तिमार्गाङ्गभूतौ। ज्ञानेनाक्षरब्रह्मप्राप्तिः, भक्त्या तु परब्रह्मणा श्रीकृष्णेन सह क्रीडारसानुभवः। ज्ञानेनाक्षरं ब्रह्मप्राप्तानां भगवदिच्छया भक्तेराविर्भावः, ततश्च मोक्षः। शुद्धाद्वैतं नाम शुद्धस्य जीवस्य ब्रह्मणा ऐक्यम्, शुद्धं वा अद्वैतं शुद्धाद्वैतम्, शुद्धत्वं चाविद्यामायादिरहितत्वमिति।

## निम्बार्कमतम्

निम्बार्काचार्यास्तु परमात्मा अनन्तकल्याणगुणसम्पन्नो विष्णुरेव। स च चिदचिदाकारेण परिणमते। परिणामेऽपि तस्य कृत्स्नप्रसक्त्यादिदोषा न प्रसज्यन्ते, अचिन्त्यशक्तित्वात्। ब्रह्मणो वेदादेवाचिन्त्यशक्तिमत्त्वसिद्धेः। यद्यपि जीवः स्वरूपेण नित्यः, तथापि देहादिविशिष्टरूपेण तस्य ब्रह्मकार्यत्वाद् एकविज्ञानेन सर्वविज्ञानसिद्धिः प्रपञ्चस्य ब्रह्मपरिणामत्वेन ब्रह्मप्रपञ्चयोर्भेदाभेदौ, न त्वत्यन्तभेदः। तत्त्वमसि सर्वं खल्विदं ब्रह्मेत्यादौ अभेदांशमात्रं बोध्यते। जीव उत्क्रान्त्यादिसम्भवानुरोधादणुपरिमाण इष्यते।

तस्य मोक्षदशायामीश्वरसाम्यमेव, न त्वभेदः। ईश्वरसमभावापन्नो मुक्तो जगद्व्यापारवर्जं ब्राह्ममैश्वर्यमनुभवति। मोक्षसाधनं च संन्याससहिता भक्तिः। ज्ञानकर्मसमुच्चयश्च नाद्रियते। भक्तिकाले ईश्वरो जीवेन स्वाभेदेनैव ध्यातव्यः। तथा ध्यानेन स मोक्षदशायामपहतपाप्मत्वादिविशिष्टचैतन्यरूपेणाविर्भवतीत्याहुः।

## भास्करमतम्

भास्कराचार्यास्तु भेदाभेदवादिनः प्रायेण श्रीशङ्कराचार्यभाष्यानुसारेणैव सूत्राणि व्याकुर्वन्ति, परन्तु तेषां मते ईश्वरस्य जीवेन जगता च सह भेदाभेदौ। ईश्वरस्य द्वे शक्ती—भोग्यशक्तिः, भोक्तृशक्तिश्चेति। तत्र भोग्यशक्तिराकाशादिरूपेण परिणमते; भोक्तृशक्तिर्जीवरूपेणावतिष्ठते। स्वप्नदृष्टान्तेन चायमर्थो विशदीभवति। जीवः स्वतो ब्रह्माभेदाद् विभुरपि औपाधिकरूपेणाणुः। उपाधयश्च तस्य अनादिकालप्रवृत्ताविद्याकामकर्माणि। स चेश्वरांशोंऽशाशिनोर्भेदाभेदौ अग्निविस्फुलिङ्गादौ प्रसिद्धौ। अवस्थितेरिति काशकृत्स्न इति सूत्रे उत्क्रमणात् प्रागपि जीवस्य ब्रह्मरूपेणावस्थानोक्त्या तस्य परमात्माभिन्नत्वमस्त्येव। तर्हि कथं तस्य बन्धः,

कथं वा मोक्ष इति चेदत्रोच्यते—न वयं ब्रह्मणो वा जीवस्य वा अनाद्यनिर्वाच्यमज्ञानं स्वीकृत्य तत्सम्बन्धाद् बन्धः, तन्निवृत्त्या मोक्ष इति वदामः। अपि तु पारमार्थिक एव बन्धः, यथा जगत्। तस्य वस्तुभूतस्य देहादिष्वनात्मसु आत्मबुद्धिर्ब्रह्मस्वरूपा प्रतिपत्तिश्चेति तदुभयं ग्रहणाग्रहणात्मकमविद्या। सा च तत्त्वमस्यादिवाक्यजनितया विद्यया निवर्तते। अविद्यानिवृत्तावपि प्रपञ्चो न निवर्तते तस्य सत्यत्वात् सत्यस्य ज्ञानेनानिवृत्तेः। उक्ताविद्यानिवृत्तौ मुक्तः सर्वात्मभावं प्रतिपद्यते। तदुक्तं सर्वज्ञः सर्वमेवाविवेशेति। "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति श्रुतिश्च मुक्तौ प्रपञ्चसद्भावं दर्शयति। देहादावभिमानात्मकाविद्यानिवृत्तौ जीवः शरीरपातानन्तरमर्चिरादिमार्गेण ब्रह्मलोकं प्राप्य सर्वज्ञत्वसर्वशक्तित्वनिरतिशयसुखादिसंवेदी सन् शुद्धेन परमात्मरूपेण ब्रह्मणा अविभागेनावतिष्ठते। इयमेव मुक्तिः। मोक्षसाधनं तत्त्वज्ञानं च तत्त्वमस्यादिवाक्यजन्यमभेदज्ञानमेव। तच्च "विज्ञाय प्रज्ञां कुर्वीत" इत्युक्तेः आवृत्तिसहितं मोक्षसाधनम्। अस्मिन् मते ज्ञानकर्मसमुच्चयान्मोक्षः। कर्मसंन्यासस्तु अप्रामाणिक एव। जाबालोपनिषद्गतं ब्रह्मचर्यादेव प्रव्रजेदिति वाक्यं केनापि दुर्विदग्धेन उपनिषदि संयोजितमित्याहुः।

## श्रीकरमतम्

वीरशैवमतावलम्बिनः श्रीपत्याचार्यास्तु स्वीये श्रीकरभाष्ये शक्तिविशिष्टाद्वैतं स्वमतमाहुः। शक्तिर्नाम माया, तद्विशिष्टो मूर्तित्रयातीतः परमेश्वर एव तत्त्वम्। मायाशक्तिपरिणामश्च जगत्-परिणामपरिणामिनोरभेदाद् जगतः शक्त्यभेदः। शक्तिशक्तिमतोरभेदाच्च सर्वं खल्विदं ब्रह्मेति श्रुतिवादः। जीवस्तु ईश्वरस्यांशः। अंशांशिनोर्भेदाभेदौ। इमौ च विरुद्धावपि 'द्वा सुपर्णा' इति 'तत्त्वमसि' इति च श्रुतिद्वयप्रामाण्यादभ्युपेयेते। तस्याणुत्वविभुत्वे अहिकुण्डलन्यायेनोपपाद्येते। आकाशादिजडप्रपञ्चः शक्तेः स्वरूपत एवान्यथाभावः। जीवस्तु तस्या ज्ञानशक्तिसङ्कोचरूपोऽन्यथाभावो न स्वरूपान्यथाभाव इति स नित्यः। तथा च चेतनाचेतनपरिणामिशक्तिविशिष्टं ब्रह्मैव तत्त्वमिति शक्तिविशिष्टाद्वैतं तत्त्वमाहुः। अस्मिन् मते ईश्वरः सर्वज्ञत्वादिविशिष्टः सगुण एव। तस्मिन् निर्गुणत्वाद्वितीयत्वादिश्रुतयः सृष्टिपूर्वकालिकेश्वरावस्थाविषयाः जीवस्य शरीरेन्द्रियमनःप्राणेषु अहं ममेत्यभिमानो बन्धः। बहुजन्मकृतसुकृतपरिपाकेन तस्य स्वज्ञानशिवज्ञाने जायेते। ततः तस्य पाशरूपमायाशक्त्युच्छेदपूर्वकशिवत्वप्राप्तिर्मोक्षः। जीवन्मुक्तिर्नाङ्गीक्रियते। ज्ञानाद् जीवस्य शिवलोकप्राप्त्या शिवसायुज्यं मोक्षः। मूर्तशिवोपासकानां क्रममुक्तिः, अमूर्तशिवोपासकानां सद्योमुक्तिः। चरममोक्षदशायां जीवो ज्योतिर्मयशिवतत्त्वं संपद्य स्वीयेन सर्वज्ञसर्वशक्तिसत्यज्ञानानन्दनित्यशुद्धबुद्धशिवरूपेण विर्भवतीति निष्कर्ष इत्याहुः।

## गोविन्दाचार्यमतम्

अर्वाचीना गोविन्दाचार्यास्तु मायाख्यया परया शक्त्या सम्पन्नो विष्ण्वाख्य ईश्वरः सत्यज्ञानानन्दरूपः। तस्य सत्यकामत्वादयो गुणाः। स च जीवेभ्योऽत्यन्तभिन्नः, जीवश्च ज्ञानस्वरूपोऽपि ज्ञाता अहमर्थः परमार्थतः कर्तृत्वादिमान्। अणुश्च अनन्तसंख्याकश्च। तस्य ज्ञानरूपो गुणश्च नित्यः, नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति श्रुतेः। तस्य ईश्वरशक्तिरूपत्वादीश्वरांशत्वम्। तस्य चेश्वरांशस्य स्वांशिवैमुख्यान्मायया परिभवः संसारश्च। भगवत्साम्मुख्ये सति माया नश्यति। भगवत्प्रसादरूपस्य साम्मुख्यस्य कारणं सत्सङ्गः। तेन भगवद्विषयकापरोक्षसाक्षात्कारः। ततश्च तत्स्वरूपावारकाविद्यानाशः। अविद्याध्वंसश्चानन्तत्वान्नित्यः। मोक्षश्च दुःखनिवृत्तिविशिष्टसुखप्राप्तिः। इत्थं च जीवेश्वरयोरत्यन्तभेद एव शास्त्रार्थः। सर्वं खल्विदं ब्रह्मेति तु ब्रह्मव्याप्तत्वाद् ब्रह्माधीनत्वाद्वा गौणम्। तत्त्वमसीत्यादिकं तु एकस्थानस्थत्वपरम्। अहैतुकी भक्तिरेव मोक्षसाधनम्। भगवतश्च ऐश्वर्यं माधुर्यं चेति रूपद्वयम्। तत्रैश्वर्यं श्रीकृष्णस्य सर्वेश्वरत्वम्, तज्ज्ञानं च विश्वरूपदर्शनेन अर्जुनस्य यशोदायाश्च आविर्भूतम्। माधुर्यं च आनन्दरूपत्वम्, तज्ज्ञानं राधाया गोपिकादीनां च। तद्द्वारा भक्तिरपि द्विधा। तत्राद्या विधिभक्तिः। विधिश्च भगवन्माहात्म्यप्रतिपादकं शास्त्रम्। तन्निष्ठा अर्चिरादिना वैकुण्ठं गच्छन्ति। द्वितीया रुचिभक्तिः। तद्वन्तः स्वयं भगवतैव भगवत्पदं गच्छन्तीति विवेकः।

## स्वामिनारायणमतम्

गूर्जरप्रदेशे स्वामिनारायणाख्यैः साधुभिः कश्चिद्भक्तिमार्गो शतसंवत्सरेभ्यः प्राक् प्रचारितः। ऊचुश्च ते वेदान्तविषये वयं श्रीरामानुजाचार्यप्रदर्शितं विशिष्टाद्वैतसिद्धान्तमेवाभ्युपगच्छाम इति। तदनुसारेण च तच्छिष्यैः प्रस्थानत्रयव्याख्यापि सम्पादिता, परन्तु रामानुजाचार्यानभिमता अपि केचन विशेषा अस्मिन् मते उपलभ्यन्ते। तद्यथा—

ऐकात्म्यमेव विज्ञेयं नारायणमहेशयोः।
उभयोर्ब्रह्मरूपेण वेदेषु प्रतिपादनात्॥

इति तेषां मूलग्रन्थे उपलंभात्। एतैः शिवविष्णवभेदोऽङ्गीक्रियते, तदनुसृत्य शिवरात्रिव्रतादिकमप्यनुष्ठीयते। किञ्चैतैः ईश्वरातिरिक्तमक्षराख्यमपरं ब्रह्माङ्गीक्रियते। अक्षरात्परतः पर इति भगवद्गीतावचनात्। ततश्च जडशरीरान्तःप्रविष्टं सर्वव्यापि अक्षरब्रह्म तदन्तःप्रविष्टं परं ब्रह्म इति विशिष्टाद्वैतं प्रतिपादयन्ति।

एवमष्टानां वेदान्तदर्शनानां तात्पर्यं यथामति समग्रहीषम्। ब्रह्मसूत्रेषु मध्ये शास्त्रदृष्ट्या तूपदेशो वामदेववद् इति सूत्रं विशेषतोऽवधानमर्हति। पूर्वसूत्रे न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्नित्यत्र वक्तुरात्मोपदेशस्य प्रकृतत्वात्। अस्मिन्नपि सूत्रे उपदेश इत्यनेन इन्द्रकर्तृको मामेव विजानीहि इत्युपदेश एव ग्राह्यः। स चोपदेशः शास्त्रदृष्ट्या ग्राह्य इति वदन् सूत्रकार एतदुपदेशमूलभूतं शास्त्रगतं वाक्यं न वाक्यमात्रम्, अपि तु शास्त्रमेवेत्यभिप्रैति। कुतः? तस्य शास्त्रसारत्वात् शास्त्रतात्पर्यविषयत्वाच्च। तच्च शास्त्रं तत्त्वमसि इत्येतदेव सर्वसम्मतम्। तथा च तत्त्वमसिशास्त्राद्योऽर्थः आर्जवेन लभ्यते, स एव शास्त्रार्थ इत्युक्तं भवति।

सर्वासामुपनिषदां ब्रह्मसूत्राणां भगवद्गीतायाश्च एकवाक्यतासम्पादनं दुष्करमेव। शुद्धसत्त्वैः भगवद्भक्तैः सकलशास्त्रनिष्णातैः सर्वज्ञकल्पैरेव कैश्चिदस्मिन् विषये प्रायत्यत। अतस्सर्वेऽप्येते आचार्याः पूज्यतमाः। न केवलं तत्तदाचार्यानुयायिभिः, अपि तु इतराचार्यानुयायिभिरपि सर्वे सम्मानार्हाः।

या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमो निष्ठा हि ताः स्मृताः॥

इत्यनेनावैदिकस्मृतीनामपरिग्राह्यत्वमाह भगवान् मनुः। तथा तर्कमात्रबलेन ईश्वरादिकं साधयतां मतं भगवता बादरायणेनैव निराकारि तर्काप्रतिष्ठानादिति सूत्रयता। तथा च वेदव्याख्यानेन तदनुरोधिब्रह्मसूत्रभगवद्गीतादिव्याख्यानेन च पदार्थान् प्रतिष्ठापयन्तः, इमे आचार्याः पूज्यतमा एव। अत एव श्रीशङ्कराचार्यैः दहराधिकरणे "केचित्तु पारमार्थिकं जैवं रूपं मन्यन्ते अस्मदीयाश्च केचित्" इत्यत्र जीवब्रह्मभेदवादिनमपि उपनिषद्व्याख्यातृत्वमात्रेण स्वसयूथ्यमाकलय्य साभिमानमाहुः—अस्मदीया इति। इममुपदेशं प्रमाणीकृत्य तत्तद्वेदान्तानुसारिण इतरवेदान्ताचार्येषु तदनुयायिषु च महान्तं प्रेमाणं वहन्त एकमेव परं तत्त्वं तत्तन्नाम्ना उपास्यत इति सिद्धान्तं दृढीकुर्वन्तः परमपुरुष वरणीयताहेतुभूतान् कल्याणगुणान् सम्पादयन्तः परे ब्रह्मणि मोदन्तामित्यभ्यर्थये॥



